# हास्यार्णवप्रहसनम्

—❀❀❀—

लेखकः

महामहोपाध्यायः श्रीजगदीश्वरभट्टाचार्यस्तर्कालंकारः



सम्पादकः

[illegible]प्रसाद शास्त्री



卐

प्रकाशकः

संस्कृतकार्यालयः अयोध्या

मूल्यम् ।।।) द्वादशाणकाः



# हास्यार्णवप्रहसनम् ।



स्वेदस्यन्दितसान्द्रचन्दनचयं दोर्वल्लिबन्धश्रमा-
दूर्ध्वश्वासपरिस्खलत्स्मरकथं सन्दष्टदन्तच्छदम् ।
शीत्काराञ्चितलोचनं सपुलकं भ्रान्तभ्रुनृत्यत्करं,
पार्वत्यां सुरतं मुदे रसवतामास्तां मृडानीपतेः ॥
स्वर्भानुः सुरवर्त्मनाऽनुसरति प्राप्ताभिलाषाद्वसा-
विन्दोरिन्दुमुखि ! ग्रसेत किमुत भ्रान्त्या भवत्या मुखम् ।
इत्थं नाथगिरा नभोऽर्पितदृशो वक्त्रं भवान्या भृशं,
भामिन्याः कृतचुम्बनस्त्रिनयनः स्तादिष्टसिद्ध्यै सताम् ॥

नान्द्यन्ते सत्रधारः — अलमतिविस्तरेण

हास्यप्रस्फुटदन्तमौक्तिकचयच्छाया मनोज्ञाऽऽनना,
नानाऽलङ्कृतिसत्कृता रसवतां चित्तप्रमोदस्थली।
स्वच्छन्दं वरभङ्गिनी रसवती सीमन्तिनीव स्वयं,
रथ्या श्रीजगदीश्वरस्य कविता सच्चित्तमानन्दयेत् ॥

अस्ति च तस्य कवेर्निजकुलकमलप्रकाशदिनकरस्य त्रिपुरहर चरणप्रणामचन्द्रमःप्रकाशितकवित्वकैरवस्य मां प्रति निदेशः— त्वमिह सुरभिसमयोचितेनाऽस्मद्विरचितेन हास्यार्णवनाम्ना प्रहसनेन विदग्धसमुदायानां हृदयानन्दमुत्पदयेति। अवश्यमेतच्छासनमनुष्ठेयं, यतो विदग्धजनमण्डितायां संसदि रसवत्या वाचा विलसितुं नर्त्तितुञ्च ममापि चित्तकौतूहलमस्ति, अतस्तत्सङ्गीतकमवतारयामि। (परिक्रम्याऽवलोक्य च) अहो! कुसुमसमयरमणीयता चेतो हरति, यतः—

चञ्चति चन्दनपवने ध्वनति च मधुमत्तमधुव्रते मधुरम्।
कूजति कोकिलनिकरे न हरति सुरभिर्मनः कस्य ॥

अन्यच्च:—

उड्डीयते स्खलति गुञ्जति कुञ्जमध्ये,
पुष्पाणि चुम्बति परिष्वजते द्विरेफीम्।
घूर्णन् भ्रमत्यपि परागविधूसराङ्गो,
भृङ्गोऽथ किन्न कुरुते मधुपानमत्तः ॥

तत्कथमत्र ललनां विना बिनोदः? (परिक्रम्य नेपथ्याभिमुखं पठति)

भृङ्गारराजनलिनीदलमत्कटाक्षे,
पीयूषरश्मिवदने मदनेषु तुल्ये।
कन्दर्पसर्पपरिदष्टसुधे विदग्धे,
स्निग्धे प्रिये! त्वरितमागमनं विधेहि ॥

(प्रविश्य नटी)

अज्जउत्त ! एसम्हि दे आण्णाणियोयेण समागदा ता अणुग्गहवअणं पसादीकरोदु । [1]

सूत्रधारः—आर्ये ! पश्य—

आशासु प्रसरन्ति कोकिलकलध्वाना निकुञ्जान्तरे,
गुञ्जन्तो भ्रमराः समुत्कमनसश्चुम्बन्ति पुष्पावलीम् ।
स्पर्शोत्सरितमल्लिकापरिमलः श्रीखण्डवायुर्वहे—
दित्थं कं न करोत्ययं स्मरशराक्रान्तं वसन्तोद्भवः ॥

अन्यच्च—

हृष्टाऽन्यपुष्टमधुरध्वनिभिर्नवोढा-
मध्यापयेदिव सुमाधविकालतेयम् ।
आलिङ्ग्य चूतमसकृत्कलकण्ठशब्दं,
नूत्नप्रसूनपुलकं कुसुमागमेऽस्मिन् ॥

(नटी किञ्चिदनन्यचित्ततां नाटयति)

सूत्रधारः—आर्ये ! किमित्यनन्यचित्ताऽसि ?

नटी—ण सुणिदं अज्जउत्तेण ? [2]

सूत्रधारः — किन्तत् ?

नटी—अज्ज ! अज्जेव णिम्मज्जा अन्तरउरवाइणा अणय-सिन्धुणा नरवइणा मंडलविआरणा कादव्वा तेण अण्णचित्तम्हि. [3]

सूत्रधारः—कान्ते ! किमेतत् सत्यम् ?

---

१—आर्यपुत्र ! एषाऽस्मि ते आज्ञानियोगेन समागता तस्मादनुग्रहवचनं प्रसादीकुरु । २—न श्रुतमार्यपुत्रेण ? ३—आर्य ! अद्यैव निरवनान्तःपुरवासिना अनयसिन्धुनरपतिना मण्डलविचारणा कर्तव्या तेनाऽन्यचित्ताऽस्मि ।

नटी—अथ इं ! नेपथ्ये—

घटयत वटजालं तोयशून्यं पुरस्ता—
त्पथि तुषनखलेखाः क्षिप्यतां भो नियुक्ताः।
निजपुरपरिचर्याकर्तुमेवाऽयमुत्को,
नृपतिरनयसिंधुस्तूर्णमागच्छतीह ॥

सूत्रधारः ( आकाशे कर्णं दत्वाऽऽकर्ण्य च )

नीतिर्भीतिमतो दिगन्तमभजत्क्षिप्रं समं साधुभि—
र्धूर्तानां पटुतापरं परधनाऽऽकृष्टं न केषां मनः।
कान्ता कस्य बलान्न केन रमिता राज्ये यदीयेऽधुना,
तस्य क्षोणिपतेः समागतिरिह स्थातुं न युक्तं प्रिये ॥

( तदितोऽन्यत्र गच्छाव इति निस्क्रान्तौ )

इति प्रस्तावना

( ततः प्रविशति सानुचरो नरपतिरनयसिन्धुः )

राजा—( स्वगतम् ) अहो ! दुर्दैवम् । कुशुमसरनिकरजर्जरशरीरेण रात्रिन्दिवं परवनितानिधुवनविलीनमनसा कियत्कालं पौरपरिचर्या न कृतेति ( प्रस्मरति, प्रकाशम् ) अये चरश्रेष्ठ ! अयथार्थवादिन् ! निरूध्यतां तावन्मण्डलम् ।

चरः—जं देवो आणवेदि ( इति निष्क्रम्य समन्तादवलोक्य च पुनः प्रविश्य नृपकर्णसमीप उच्चैः ) देवो जाणिदं मंडलरहस्यम् ।२

राजा—कथय कथय । ३

चरः—ववहारो अत्तं गदोत्ति ।

---

१—अथ किम् ! २—यद् देव आज्ञापयति । देव ! ज्ञातं मण्डलरहस्यम् । ३—व्यवहारोऽस्तं गतोऽस्ति ।

राजा—( सक्रोधं ) कुतः ?

चरः—( संस्कृतमाश्रित्य ) देव ! यतः—

आलिङ्गन्ति निजाङ्गनां परवधूं हित्वा जनाः साम्प्रतं,
नीचः सीदति सत्युपह्वानहमहो सद्ब्राह्मणानां गणे ।
वन्दन्ते द्विजमन्त्यजे निवसति, व्रीडाविहीना जना,
एवं मण्डलवैपरीत्यमधिकं जातं महाभूपते ।

अपिच—नारीणां नयनेऽञ्जनं न जघने, सिन्दूरता मुण्डिते,
सीमन्ते न च नूपुरौ, पदयुगे यावोऽपि नैवेक्षणे ।
वक्षोजे मणिमञ्जरी न चरणे, काञ्ची कटौ नाऽधरे,
चेत्थं वैशविपर्ययः प्रति गृहं दृष्टः सकष्टं मया ।

राजा—( आकर्ण्य आत्मगतम् ) चिरकालाऽविचारणयाऽयमव्यवहारो जातः पौराणाम् । भवतु, दण्डं विधास्यामि । ( प्रकाशम् ) अये ! आहूयतां कुमतिवर्माख्यो मन्त्री ।

चरः—'जं देवो आणवेदि'[1] ( इति निष्क्रम्य तेन सह पुनः प्रविष्टः; प्रविश्य कुमतिवर्मा वामपाणिना नृपतिं नमस्कृत्य — अप्रष्टोऽपि ) प्रस्फुटमाज्ञापयतु महाराज ! किमनुष्ठेयम् ?

राजा—मन्त्रिन् ! अस्थानं बत, स्थानं विना चिरं मण्डलचर्चा न क्रियते ।

मन्त्री—( ससम्भ्रमम् ) देव ! अत्रैवास्ति च परमरमणीयं स्थानम् ।

राजा—निवेदय, निवेदय ।

मन्त्री—बन्धुरायाः कुट्टिन्याः प्राङ्गणम् ।

---

१—यद् देव आज्ञापयति ।

राजा—( साट्टहासम् ) कुमतिवर्मन् ! मम चित्तेन सममभिमन्त्र्य संसदि प्रविष्टवानसि, यतो दैव्यात् गलितकुचस्पर्शविमुखस्य वाराङ्गनाऽऽलिङ्गनाय ममाप्यभिलाषः, यत उदरपतितस्तनीषु कुतः स्मरावस्थितिः ? तथा च—

उत्तुङ्गस्तनशैलदुर्गविषमे वामेक्षणानां हृदि,
स्थित्वा यत्र बलाद्भिनत्ति हृदयं यूनां सुतीक्ष्णैः शरैः ।
तस्मिन् मन्मथयुद्धमर्दनवशात् पातं प्रयाते स्तने,
मन्ये दुर्गपराजयादपसरेद् भीरुः स पुष्पायुधः ॥

मन्त्री—तदुपसर्पावः ।

राजा—सोल्लासं मन्त्रिणा सह परिक्रामति ।

चरः—( पुरः परिक्रम्य ) देओ एत्थज्जेव पूरदो घणदर-घणआरसुरहिचन्दण-मियणाभिविविहकुसुमपरिमलभरोऽपसरदि ता एदं वन्धुराए मन्दिरं तक्केमि । इदो अणुसरदु देओ । १

राजा—( प्राङ्गणमनुसृत्य सप्रमोदम् ) इदं वन्धुरायाः प्राङ्गणं, प्राप्तं तीर्थशतपर्यटनपुण्यम् ।

मन्त्री—क्व सा वन्धुरा कुट्टिनी ?

(ततः प्रविशति भुजंगशतपरिवेष्टिता वन्धुरा ) अहो अच्चरीयं२ ननु रे भुजंगाः ! अणयसिन्धु—नरवइणो धूत्ताणं चक्कवट्टिणो समागमो वट्टदि ता कधं तालज्जुअलभिल्ली मद्दण—मिलिदाइं वसन्तसमयसुहिसिय गीदाइं गाइदुं विलम्बीअदु । ( उपसृत्य भुजंगाः )

---

१—देव ! अत्रैव पुरतो घनतरघनसारसुरभिचन्दनमृगनाभि विविध कुसुमपरिमलभरोऽपसरति, तस्मादिदं बन्धुराया मन्दिरमिति तर्कयामि । इतोऽनुसरतु देवः ।

बन्धुरा-पुत्ति! तुमं विप्पअर, शासनं कुण। + [मृगाङ्कलेखा गृहं प्रविशति ]

कलहांकुरः-[उपसृत्य] पढमं अम्हाणं गुरसिस्साणं णायं विचारीअदु अज्जमिस्सो। ❀

मदनान्धमिश्रः—आर्यपुत्र! क्षणं विरम यावत् कृतु-क्रिया निवर्तते। [इति गृहं प्रविश्य निर्भरं सुरतं निर्वाह्य सहर्षम् ]

आश्लेषपीडितकुचं श्रमघर्मितास्यं
दष्टाधरं ललितशीत्कृतमीलिताक्षम् ॥
आटूङ्कितागुमिलितभ्रु चलत्कटाक्षं
वेश्यारतं जनिशार्जितपुण्यलभ्यम् ॥

(परिक्रम्य बहिः प्रविशति नायिका च परिक्रामति )

विश्वभाण्डः—[ नायिकामवलोक्यात्मगतम् ]

यन्मैत्रं गलिताञ्जनं सुललितं निर्मुक्तरागोऽधरो
धम्मिल्लः श्लथबन्धनः श्रमजलप्रक्षालितं चन्दनम्।
निष्पन्दं जघनं भुजे शिथिलता वक्षःस्थलं कम्पते,
तत्सत्यं सुरतं विधाय सुतरामेषा समागच्छति ॥

कुशलः—[ पुरः साट्टहासम् ] अज्ज एक्केण णिव्वाहि-दा कदुक्किया? +

मदनान्धमिश्रः—( सदक्षिणाक्षिसङ्कोचम् ) निवारयति।

विश्वभाण्डः—( सस्मितम् ) महामिश्र! ज्ञातेयन्ते कृतु-क्रिया। भवतु तथापि विचार्यतामावयोर्न्यायः। ( कर्णे स्वैरम् ) यथेयं मृगाङ्कलेखा परिणीता भवति तदनुष्ठेयम्।

+ पुत्रि! त्वं विप्रवरशासनं कुरु। ❀ प्रथममस्माकं गुरुशिष्ययो-र्न्यायं विचारयत्वार्यमिश्रः +— आर्य एकेन निर्वाहिता कृतुक्रिया?

विश्वभाण्डः-- (विहस्य) सत्यमेव मदनान्धोऽसौ यतः पुंस्यपि वेश्याभ्रमः ।

मदनान्धमिश्रः-- (उपसृत्य) वाराङ्गने ! त्वामहं प्रणमामि ।

बन्धुरा- पुत्ति ! उद्विअ आसिसं कुण । +

मृगाङ्कलेखा - (उत्थाय) गोरी दे सुप्पसण्णा होदु । *
(इति सलज्जं नाटयति)

मदनान्धमिश्रः - अहो ! आश्चर्यमस्याः--

पादाभ्यां गुरुनितम्ब एषः
प्रोद्वोढुं कथमपि शक्यते मृगाक्ष्याः ।
एकाकी वहति कथन्नु मध्यभागः
प्रोत्तुङ्गस्तनकरिकुम्भयुग्मभारम् ॥

बन्धुरा- अज्ज विप्पअर ! विण्णवेमि अज्ज अम्हाणं गेहे कन्दप्पहोमो वट्टदि दं णिव्वाहयदु मिस्सो । +

मदनान्धमिश्रः - ( सहर्षमङ्गनागतमंगनामवलोक्य )

वेदी यज्जघनश्च तत्परिसरे कुण्डं वराङ्गं फलं
नैवेद्याय कुचद्वयं मृगदृशः कामानलः प्रोज्ज्वलः ।
होताऽहं खलु शुक्रहव्यनिवहं शोफश्रुवं यावम--
मित्थं पञ्चशराध्वरं त्यजति कः स्वः सुखं यत्फलम् ॥

(प्रकाशम्) बन्धुरे ! त्वमतिजीर्णा अकार्यकुशला च त नियोजय स्वपुत्रीं यज्ञसामग्रीकरणाय ।

+--पुत्रि ! उत्थायाशिषं कुरु । *--गौरी ते सुप्रसन्ना भवतु ! +--आर्य विप्रवर ! विज्ञापयामि, अद्य अस्माकं गृहे कन्दर्पहवनं वर्तते त निर्वाहयतु मिश्रः ।

महुमत्तमहुव्वतराअजुत कलकण्ठविलासिणिगाणचयं ।
जुअचित्तविआरणपञ्चसरो तुह भोदु मुहुर्बहुपीदिअरो ॥ १

( इति पुनः पुनर्नाटयति )

राजा ( आकर्ण्य कर्णौ स्वैरम् ) हे कुमतिवर्मन् ! किञ्चिदियं प्रार्थयते ।

कुमतिः ( ततः ) निखिले जगति महापातकिनो भवन्त एवातः सर्वान् विहाय ते शिरसि भविष्यति वज्रपातः ।

राजा — न ज्ञायते किमेवं वा भविष्यति ? तदा किं विधेयम् ? ( आत्मगतम् , अलं भयेन प्रणम्यैनां प्रतारयामि प्रकाशम् ) मातर्बन्धुरे ! अयमहं प्रणमामि ।

बन्धुरा—मिअङ्कलेहा दे सुप्पसण्णा भोदु । २

राजा [ सहर्षमात्मगतम् , निस्तीर्णोऽस्मि महापातकाभ्र प्रार्थितमनया किञ्चित् , प्रकाशम् ] क्व सा मृगाङ्कलेखा ?

[ ततः प्रविशति विशेषालंकृतशरीरलतिका मृगाङ्कलेखा नायिका। सस्मितमम्ब ! क एषः ?

बन्धुरा—पुत्ति ण जाणासि अणीयसिन्धुभूमिसरो दे दंसणत्थी ।

---

१—आश्चर्यमाश्चर्यम् । अनयसिन्धुवरपतेर्धूर्तानां चक्रवर्तिनः समागमो वर्तते, तत्कथं नालगुरुझिल्लीमर्दनमिलितं वसन्तसमयमधुरिरव गीतं गातुं विलम्बयत ?

मधुमत्तमधुव्रतराजयुतः कलकण्ठविलासिनिगानचयः ।
युवचित्तविदारणपञ्चशरस्ते भवतु मधुर्बहुप्रीतिकरः ॥

२—मृगाङ्कलेखा ते सुप्रसन्ना भवतु । ३—पुत्रि ! न जानासि अनयसिन्धुभूमीश्वरस्य दर्शनार्थी ।

मृगाङ्कलेखा –[ सस्मितम् ] इदो अहिअं किं पुण्णम् ? १

राजा--( नायिकामवलोक्य ] अहो ! आश्चर्यमस्याः--

अज्ञातेन्दुपराभवं परिलसद्भ्यालोलनेत्राञ्जनं,
भ्रान्तभ्रूलतमैणनाभितिलकं श्रीखण्डपत्रालकम् ।
बन्धूकाधरसुन्दरं सुरमुनिश्यामोहि वाक्यामृतं,
त्रैलोक्याद्भुतपङ्कजं वरतनोरास्यं न कस्य प्रियम् ॥

अपिच–अस्या धामसरोवरे*भुजविषे वक्त्रारविन्दे भ्रम--

न्नेत्रभ्रूभ्रमरे सुयौवनजले कस्तूरिकापङ्किले ।
वक्षोजप्रतिकुम्भिकुम्भदलनक्रोधादुपेत्य द्रुतं,
मग्नश्चित्तमतङ्गजः कथमसावुत्थाय निर्यास्यति ॥

[ पुनर्बन्धुरामन्यमनस्कामवलोक्य सस्मेरं ] बन्धुरे ! कथमन्यहृदयासि ?

बन्धुरा—देओ मिअङ्कलेहाए मन्महतन्तं अज्झावणत्थं विस्सभण्ड उआज्झाओ आगमिस्सदि अण्णहिअआस्मि । २

राजा—( सदर्पम् ) अस्माकं कुलपुरोहित स एव । [ नेपथ्ये ]

दिनोपवासी तु निशाभिभाशी जटाधरः सन् कुलटाभिलाषी ।
अयं कषायाम्बरचारुदण्डः शठाग्रणीः सर्पति विश्वभाण्डः ॥

[ ततः प्रविशति विश्वभाण्डः कलहाङ्कुरेण स्नातकेनाऽनुगम्यमानः । [ परिक्रम्य समन्तादवलोक्य च ] अहो ! अभिनवकुसुमकालो वर्तते । अपि च—

१—इतोऽधिकं किं पुण्यम् ?

*—देहसरोवरे—गृहदेहत्विट्प्रभावा धामानीत्यमरः ।

२—देव ! मृगाङ्कलेखाया मन्मथतन्त्रमध्यापनार्थं विश्वभाण्ड उपाध्याय आगमिष्यति, एतेनान्यहृदयाऽस्मि ।

कुसुमशरसखो विनोदबन्धुर्विविधविलासकलाकलापधामा ।
भवति हृदयाभ्ययञ्जनानां सुरभिरिवासवसञ्चयः सुगन्धिः ॥

[ पुनः स्नातकमवलोक्य पठति ]

आकाशे प्रसरन्ति तालयुगलस्वानाः सझिल्लीरवैः,
सर्वाशामुखरो ध्वनत्यविरतं मन्दं मृदङ्गध्वनिः ।
कर्पूरागुरुगन्धबन्धुरनिलो व्याप्नोति सर्वा दिशो,
गेहे कस्य महोत्सवोऽद्य नियतो वत्स ! द्रुतं ज्ञायताम् ॥

( परिक्रम्य )कलहाङ्कुरः—भअवं बन्धुराए कुट्टिणीए णिलणये महुसवो वट्टदि ।+

विश्वभाण्डः—सहर्षम ! पूर्वसम्वत्सरे भोजनार्थं तया निमन्त्रिता वयं, स एवायमवसरः ।

[ इति परिक्रम्य बन्धुरायाः प्राङ्गणं प्रविष्टः । ]

बन्धुरा – उआज्झाअस्स एदं भग्गासनं उपविसदु अज्जो ।❀

विश्वभाण्डः—( ससम्भ्रमं ) मातर्बन्धुरे ! प्रणमामि ।

बन्धुरा—पुत्त ! मअणसमुद्दसन्तरणं भोदु ।❀

( विश्वभाण्डः—नायिकामवलोक्य )

मदनपयोनिधितरणं भवति करे पीवरः सुकुचकुम्भः ।
यद्यवलम्बितुमस्या लभ्यत एवैणनेत्रायाः ॥

( नायिका सस्मितमवलोकयति )

राजा—[ स्वगतम ]—महामहोपाध्यायो विश्वभाण्डः कौल-

---

+ भगवन् ! बन्धुरायाः कुट्टिन्या निलये महोत्सवो वर्तते । ❀ – उपाध्यायस्येदं भग्नासनमुपविशत्वार्यः । ❀ – पुत्र ! मदनसमुद्रसन्तरणं भवतु ।

टकुलाञ्चिताया वन्धुराया लब्धाशीर्वादः पार्श्वतः समुपविष्टः शुभाशीर्वादं संग्रहीतुं, [ प्रकाशम् ] भगवन् ! प्रणमामि ।

विश्वभाण्डः—भो कलहाङ्कुर ! द्रुतं देहि राज्ञे आशीर्वादम् ।

कलहाङ्कुरः—[ साट्टहासं ] शक्राशन*मृक्षितं दुर्वाक्षतमादाय, संस्कृतमाश्रित्योच्चैः नेत्रे पुष्पोदयो भवतु भवताम् । अपि च—

शत्रोर्वृद्धिर्भियो वृद्धिर्वृद्धिर्व्याधेः ऋणेनसाम् ।
दुर्गतेदुर्मतेर्वृद्धिः सन्तु ते सप्तवृद्धयः ॥

इति पठित्वा राजशिरसि दूर्वाक्षतमर्पयति ।

राजा— भगवन् ! कोऽयं दुष्टवटुः ?

विश्वभाण्डः—अयमविदितो भवता ?

निजवंशधूमकेतुर्भृशमघसेतुः प्रमादचयहेतुः ।
परवित्तहरणशूरः कुमतिः कलहांकुरः क्रूरः ॥

( पुनर्वन्धुरामवलोक्य भो वत्स कलहाङ्कुर ! )

प्रलम्बितपयोधरा गतरजोविकारास्पदा,
सदा विगतहंसका तिमिरलुप्ततारारुचिः ।
तिरस्कृतनिशाकरा गतवया इयं वन्धुरा ।
वटो ! सपदि वीक्ष्यतां जलधरागमश्रीरिव ॥

[ सस्मरणं ] वत्स ! वन्दनीयतरां वन्धुरामुपसृत्य नमस्कुरु ।

कलहाङ्कुरः—[ सहर्षोल्लासं परिक्रम्य बन्धुरायाश्चरणद्वयमध्यगतो दण्डवत्प्रणम्य पुनरूर्ध्वंजघनमालोक्य सहस्ततालमुच्चैर्विहस्य पुनः संस्कृतमाश्रित्य ] भो महामहोपाध्याय ! आश्चर्यमस्या बन्धुराया अधोमुखे श्मश्रुश्रेणी । अपि च—

स्तनौ तुङ्गौ निपतितौ कामसंग्राममर्दितौ
पुरस्तादवलोक्यास्या [ ० ] शुष्कं भयादिव ॥

---

* भांग गांजा इति ।

बन्धुरा—( सस्मितम् ) णट्ठो बट्टुओ सत्थको कलहाङ्कु-राहिहानो।

विश्वभाण्डः–( नायिकामवलोक्य ) अहो! तरुण्या भावप्रकर्षः।

स्वैरं सस्मितमीक्षते क्षणमलं व्याजृम्भते वेपते,
रोमाञ्चं तनुते मुहुः स्तनतटे व्यालम्बते नाऽम्बरम्।
आलिङ्गत्यपरां तनोति चिकुरं प्रत्युत्तरं याचते,
केयं कामकलाविलासवसतिर्लोलेक्षणा भाविनी ॥

अपि च—खेलत्खञ्जननेत्रया परिलसत्स्वर्णारविन्दास्यया,
पीनोत्तुङ्गनिरन्तरस्तनभरव्यालोलसन्मध्यया।
स्फीतस्फीतनितम्बया क्षणमपि व्यालोकितश्चानया,
किं न स्याद्वशिनाम्वरः स्मरहरः स्मारैश्शरैर्जर्जरः ॥

बन्धुरा—उआज्झाय! एसा मियङ्कलेहा मे पुत्ती मन्मह-तन्तं पढिदुं सुसज्जिदा वट्टदि।❀

विश्वभाण्डः—( विहस्य ) अस्माकमध्यापनं शून्यमन्दिर एव वर्तते।

मृगाङ्कलेखा—अम्म! को एसो बुड्ढसादूल व गलिदणखद-सणो जआजिण्णपञ्जरो अदिहदव्वीड़ो अहणिसं मं विडम्बदि?

कलहाङ्कुरः—[ सक्रोधम् ] आः पामरि गणिए परपुत्तविट्टसा-णिणि अम्हाणं उआज्झाअं दिट्ठा ण कुरु कुव्ववसयिणं, अस्स णिधुअण अणुरत्ता वह्मणो णओदिवं विअट्टाणं ठाणवन्भणि-

❀—नष्टो बटुः, सार्थकं कलहाङ्कुरा[illegible]

❀ उपाध्याय! एषा मृगाङ्कलेखा मे पुत्री मन्मथ[illegible]न्तं सुस-ज्जिता वर्तते। + अम्ब! क एषो वृद्धशार्दूल इव गलितनखद[illegible] जराजीर्णपञ्जरोऽविहतव्रीडोऽहर्निशं मां विडम्बयति।

अहं सिक्खअन्ती अज्जवि भमइ, अइसिसिणेहेण उआज्झाअ-गुरदो वैहुव्यमण्डलं कदुअ णिच्चं अनुसरणत्थं सुसज्जिदा भोदि, तं वुढ्ढ जल्पेसि ? अविअ—अज्ज वि उआज्झाअ लज्जाउलो वसणं पतिहलिअ जणण्यङ्के सअणं कुणइ एणं हद्द्वीणं जल्पेसि ?※

( इति क्रोधं नाटयति ]

मृगाङ्कलेखा-[ विहस्य ] धण्णा सा वह्मणी सिस्सो वि धण्णो तह्वा उआज्झाय। +

त्रिशङ्कभाण्डः ( आकर्ण्यात्मगतम् ] अहो आश्चर्यम् ।

प्राप्ता प्रस्फुटकाशपुष्पपदवी केशैस्तथैव भ्रुवा,
सम्यक् लोचनपद्मगणा च जरसा जीर्णा च दन्तावलिः ।
शुष्कं मन्मथमन्दिरं निपतितौ शुष्कातिशुष्कौ स्तना-
वेतस्याः सुतरां तथापि वचने जागर्ति पुष्पायुधः ॥

( भवतु एषापि क यास्यति ) प्रकाशम् - वन्धुरे ! जरातुरा वेपमाना दृश्यसे ।

वन्धुरा सच्चं पूव्व-अणुरत्तसिणेहाणं विअट्टाणं गुणं समरन्ती अणङ्गजआउला क्खु अहम् ।※

---

※ आः पामरि ! गणिके ! परपुरुषविलासाभिलाषिणि !! अस्माकं उपाध्यायं दृष्ट्वा न कुरु कुत्सितवार्तां . यत्र निधुवनानुरक्ता ब्राह्मणी यस्कन्दवं विदग्धानां स्थानमध्यासिनमहं शिक्षमाणा अद्यापि भ्रमति, अतिस्नेहेनोपाध्यायपुरतो वैधव्यमण्डलं कृत्वा नित्यमनुसरणार्थं सुसज्जिता भवति तं वृद्ध जल्पसि ! अपि च –अद्याप्युपाध्यायो लज्जाकुलो वसनं परिहृत्य जघनाङ्के शयनं करोति तं हतश्रीकं जल्पसि ? + धन्या सा ब्राह्मणी, शिष्यः सोऽपि धन्यस्तथोपाध्यायः । * सत्यं पूर्वानुरक्तस्नेहानां विदग्धानां गुणं स्मरन्ती अनङ्गज्वराकुला खल्वहम्

राजा—तत्कथमाहूयते आतुरान्तकसुतो महावैद्यो+ व्याधिसिन्धुः ?

विश्वभाण्डः—अपि न ज्ञायते आतुरान्तकसुतोऽसौ किंवास्य गुणा न ज्ञायन्ते ।

राजा—भवताऽपि न विदितं तस्योपचारवचनम्—

नेत्रे तप्ता शलाका जठरगुरुगदे श्लीपदे छित्तिरङ्घ्रे
रश्मर्यां नाशिकायां वडिशमतिशितं तप्तफालञ्च शूले ।
हृद्रोगे यन्त्रदारुद्वयनिविडतरं बन्धनं मुष्कदेशेऽ-
प्येतैः रस्योपचारैर्नयति पितृवनं रोगिणं कं न चाशु ॥

अपि च—

काशे धूमस्तुषाणां वलवति मरुति स्वेदभेदोपवासा,
वन्हेर्मान्द्ये च पिष्टं सपिशितमनिशं वारिपानं कफार्तौ ।
पित्तार्तावारनालं त्रिकटुरपि जलद्रोणिका सन्निपाते,
किं ब्रूमो व्याधिसिन्धोर्गुणमिह सुतारमेकवक्त्रेण सम्यक् ॥

( नेपथ्ये )—

पानीयस्थूलपादे कथमपि धरया धारिते साङ्कुरौघे ।
हस्तन्यस्ताञ्चलाग्रप्रचलितपवनैर्वारयन् मक्षिकालिम् ॥
काशात् कण्ठस्वनौघः सपदि मुखरयन् दिङ्मुखं व्योमवीथीं
मय्येषो व्याधिसिन्धुः प्रविशति सकजानन्तको राजवैद्यः ॥

( प्रविश्य व्याधिसिन्धुः शनैः परिक्रम्य सगर्वम् ।

वैद्योऽहं व्याधिवर्गाणामाश्रयोऽप्ययशोनिधिः ।
मया चिकित्सितः सद्यो मार्कण्डेयो न जीवति ॥

अपि च—

+ महावैद्यो यमः ।

तिष्ठन्त्वौषधयः सर्वाश्चिकित्साऽपि च तिष्ठतु ।
मम दर्शनतो रोगी किल प्राणैर्विमुच्यते ॥

( उपसृत्य भो भो महामहोपाध्याय ! अयमहं नमस्करोमि)

विश्वभाण्डः—कलहांकुर ! देहि भिषजे शुभाशीर्वादम् । [ कलहांकुरो हस्तमुद्यम्य उच्चैः ]

स्वल्पायुर्भव साम्प्रतं चिररिपुर्मा जीव वत्सद्वयं
वक्षस्ते खरकण्टको निविशताद् भोगी गले चुम्बतु ।
अन्येषामपराधतस्तव शिरो राज्ञा च संपश्यतां ,
ह्याभक्तो भव सर्वदा तव गृहे वन्हिः सदा नृत्यतु ॥

व्याधिसिन्धुः—अरे पामर वटो ! मामवक्षिपसि ?

विश्वभाण्डः—[ विहस्य ] भो व्याधिसिन्धो ! तव पितुरातुरान्तकस्य अन्तकालयं प्राप्तस्य कुशलम् ?

व्याधिसिन्धुः—कुतः कुशलं भवद्दर्शनं विना । [ पुनर्नायिकामवलोक्य )

कस्य न लुब्धं हृदयं काञ्चनरुचिना कुचद्वयेनास्याः ।
अवलोक्य हेमकुम्भौ न भवति भुवि कस्य वा लोभः ॥

विश्वभाण्डः—भो महावैद्य ! कश्चिच्चिकित्साप्रश्नो मां मुखरयति ।

व्याधिसिन्धुः ( सगर्वम् )—

पिण्डाय तण्डुलतिलप्रचयं निधाय
पाणौ खनित्रमपि चार्चितार्थमेव ।
वैद्योऽस्मि रोगिजनबान्धवसम्प्रदाये
प्रष्टव्य एव हृदयेषु विमुच्य मोहान् ॥

विश्वभाण्डः—[ विहस्य ) महावैद्योऽसि । ( पुनः सहर्षम् ]
महावैद्य ! प्रचुरनरश्रृङ्गाररसप्रागल्भ्यात् श्लेष्मातुरा बन्धुरा, तच्चिकित्सयामस्या उपचारः ।

विश्वभाण्डः—( विहस्य ) भो भो महाराज ! मदनज्वरातुरा बन्धुरा ।

व्याधिसिन्धुः—तदविलम्वेन सुतप्तकटुतैलेन कथमस्या गुदे नस्यं न दीयते ?

बन्धुरा—[ विहस्यात्मगतम् )एसो बुद्धिरहिदो वैज्जो, ( प्रकाशम् ) भअवं! भग्गेण पुच्छिदव्वो महावैज्जो । ❀

विश्वभाण्डः—( आकाशमवलोक्य ) आः सहस्त्रावधानेन मया विस्मृतः प्रश्नः [ विहस्य ] वत्स कलहांकुर ! स्मारय वैद्यप्रश्नम् ।

कलहांकुरः—( प्रस्फुटम् ) महावैज्ज ! मिअङ्कलेहाए पउरचन्दनकुंकुमकत्थुरियापरिलेवणे गत्तोकण्डुअणं समुपपण्णं ता एत्थ किं कादव्वं वं भण ?

बन्धुरा—( स्मितं कृत्वाऽऽत्मगतम् ) जधा ऊआज्भाअ सिस्सो वि तधा जुत्तं भस्मपुञ्जे सारमेयावट्ठाणम् ।+

व्याधिसिन्धुः–

वारिपर्णीचये शीतं घृष्ट्वा वृश्चिकमङ्कतः ।
स्नातव्यो वानरीरेणुः सद्यः कण्डुहरः परः ॥

बन्धुरा—अट्टुदो ओसहो ।+

विश्वभाण्डः—भो स्नातक ! त्वयाऽपि विस्मृतम् ?

कलहांकुरः—( स्मृतिमभिनीय ) हूं, स्मृतम्—महावैज्ज ! सुरदसमरविमद्दणादो मुंडपीडातुरा बन्धुरा ता एत्थज्जेव किं करीअदु ?❀

बन्धुरा—( सस्मितं स्वयमुपसृत्य ) महावैज्ज ! जाणिदं दे वैज्जतुणं तधावि कहणिग्गहं ओसहं भण ?❀

---

❀ एषो बुद्धिरहितो वैद्यः, भगवन् ! भाग्येन प्रष्टव्यो महावैद्यः । मृगाङ्कलेखायाः प्रचुरचन्दनकुङ्कुमकस्तूरिकापरिलेपनेन गात्रकण्डूयनं समुत्पन्नं तदत्र किं कर्तव्यं तद् भण । + यथा उपाध्यायः शिष्योऽपि तथा युक्तं भस्मपुञ्जे सारमेयावस्थानम् । + अद्भुतमौषधम् । ❀ महावैद्य ! सुरतसमरविमर्दनात् मुण्डपीडातुरा बन्धुरा, तदत्रैव किं करोतु ? ❀ महावैद्य ! ज्ञातं ते वैद्यत्वं तथापि कफनिग्रहमौषधं भण ?

व्याधिसिन्धुः—( क्षणं विचिन्त्य ) ही ही कथमेवं न निगद्यते। पुरा राज्ञो महत्प्रागल्भ्यात् सिंहासने श्लेष्मा जातस्तदा स्मृतपित्रा चरकसुश्रुतवाग्भटनागार्जुनतत्त्वविदा आतुरान्तकेन नृपतेर्लोचनद्वयं क्षारचूर्णेन निर्माज्य जलौकाशतं प्रदाय श्लेष्माऽपहृतः।

वन्धुरा—एत्थज्जेव किं कादव्वम् ?×

व्याधिसिन्धुः—अल्पोपचारसाध्येऽलं गुरूपचारेण—

वरटो भृङ्गकीटश्च जलौका वाऽथ वृश्चिकः।
घ्राणे नेत्रे च दातव्यः सद्यः श्लेष्मविनाशकृत्॥

वन्धुरा—( विहस्य ) सच्चं आतुरान्तकपुत्तो तुमम्॥ ( नेपथ्ये कलकलः )

राजा—( आकाशे कर्णौ दत्वाऽऽकर्ण्य च प्रकाशम् ) अये प्रतीहार! ज्ञायतामेतत्को मम दर्शनार्थी तं प्रवेशय।

प्रतीहारः—जं देओ आणवेदि, ( निष्क्रम्य सम्यगवलोक्य पुनः प्रविष्टः ] देओ रओकल्लोलणामधेओ नाविदो एक्केण पौरजनेन रओकलेवरेण अञ्चलगहिदो वट्टदि।॥

राजा—प्रवेशय।

प्रतीहारः [ तथा कृत्वा ] देओ एसो रओकल्लोलणाविदो [ ततः प्रविशति रक्तालिप्ताङ्गेन पौरजनेनाञ्चलगृहीतो रक्तकल्लोलः [ परिक्रम्य संस्कृतमाश्रित्य पठति ]-

मयि क्षुरं गृह्णति मानुषाणां भवेच्च याशा तनुतामुपैति।
स्ववृत्तिनिर्वाहपरे च रक्तचयोर्मिमालाऽऽकुलिता तनुः स्यात्॥

---

+अत्रैव किं कर्तव्यम् ? ॥ सत्यम् आतुरान्तकपुत्रस्त्वम्। ॥ यद्देव आज्ञापयति देव ! रक्तकल्लोलनामधेयो नापित एकेन पौरजनेन रक्तकलेवरेण अञ्चलगृहीतो वर्तते ॥ ।देव ! एषो रक्तकल्लोलनापितः।

अपि च–आर्त्तनादमधिकं प्रकुर्वतां हस्तपादगलबन्धपीडनात् ।
यं छिनद्मि नखरं नृणामहं स प्ररोहति पुनर्न जन्मना ॥

( आस्थानमालोक्य दर्पणमर्पयति )

राजा—बन्धुरे ! आदौ मुकुरं गृह्णातु भवती।

बन्धुरा—( गृहीत्वाऽवलोक्य च ) भअवं ! तिमिराउलद-प्पणे ण किम्पि मुहाकिदिं पेक्खद्धि, ता दप्पणं गेन्हदु अज्ज ?*

राजा—भो व्याधिसिन्धो ! भवदधिष्ठानेन तिमिराकुला कुट्टिनी ?

व्याधिसिन्धुः—कममग्निवर्णा शलाका स्थिरहस्तेनास्या लोचनतारकामध्ये न दीयते ! चक्षुषोरभावात् कुतस्तिमिरता ?

मृगाङ्कलेखा—( विहस्य ) पढमदो वेज्जस्स लोअणे परीक्खादि। +

व्याधिसिन्धुः—अलमिहाऽवस्थानेन गणिकाऽपि मामुपहसतीति। ( निष्क्रान्तः )

विश्वभाण्डः—( मुकुरं गृहीत्वाऽवलोक्य च ससम्भ्रमम् ) अहो ! वार्द्धक्यं जातम्। तथाहि–

शुक्लत्वं जरसा कचेषु दशनाः शीर्णा विशीर्णा तनुः
स्तैमित्यं नयने, भ्रमौ न च वचो लब्धिः, श्लथत्वं पदे।
अस्माकन्तु कथं तथापि विलसद्वाराङ्गनालिङ्गन–,
व्यामोहाय मनः सदैव चलते, चित्रं चरित्रं विधेः ॥

---

* भगवन् ! तिमिराकुलदर्पणे न किमपि मुखाकृतिं प्रेक्षिष्यामि, तद्दर्पणं गृह्णात्वार्यः। + प्रथमतो वैद्यस्य लोचने परीक्षते।

राजा—अरे नापित ! ब्रूहि स्वाभिमतम् ।

रक्तकल्लोलः—देओ एदेण दाव पीढाआरेण समं अम्हा-णं कलहो वट्टदि । +

राजा—मन्त्रिन् ! विचार्यतामनयोर्न्यायः ।

मन्त्री—अरे नापित ! निगद्यतां प्रथमतः कस्य गोचरः ?

रक्तकल्लोलः—पढमं अम्हाणं ❀

पौरः—ममाङ्गे शोणितप्रवाहः प्रथमतो गोचरः ।

मन्त्री—किं रे नापित ! कथन्ते गोचरः ?

रक्तकल्लोलः—( आत्मगतम् ] धण्णो मन्तिअरो णरराअजो-ग्गो [ प्रकाशम ] भअवं एदस्सज्जेव णअरजणस्स मस्सुमूलाक-स्सणात्थं लोअणमज्झणिहिदं बडिशं भग्गं एदेण कारणेण +

मन्त्री—भद्रमुक्तमनेन । अरे पौर ! बडिशमूल्यं दातुमर्हसि ।

बन्धुरा—( सस्मितम् ) धण्णो मन्तिअरो णरवइ-जोग्गो ❀

प्रतीहारः—[ प्रविश्य ] भअवं मिच्छाण्णव-णामधेयो बम्ह-णो अज्जं पेक्खिदुमिच्छदि ।

---

×देव ! एतेन तावत्पीठाकारेण सममस्माकं कलहो वर्तते । ❀ प्रथम-मस्माकं । + धन्यो मन्त्रिवरो नरराजयोग्यः । भगवन् ! एतस्यैव न-गरजनस्य श्मश्रुमूलाकर्षणार्थं लोचनमध्यनिहितं बडिशं भग्नं एतेन कारणेन । ❀ धन्यो मन्त्रिवरो नरपतियोग्यः । × भगवन् मिथ्यार्णवना-मधेयो ब्राह्मण आर्यं प्रेक्षितुमिच्छति ।

विश्वभाण्डः—प्रवेशय। (प्रतीहारः तथा करोति। ततः प्रविशति मिथ्यार्णवः)

मिथ्यार्णवः—[समन्तादवलोक्य) भो महामहोपाध्याय! अस्मत्पतिवासिजामातृप्राङ्गणे कश्चिद् ब्राह्मणश्चतुर्वेदाध्यायी प्रज्ञार्थनिपुणः सम्वत्सरस्नायी मक्षिकापाशाहतिक्षणितदेहो मृतस्तेन प्रज्ञाकर्षेन व्याकुलीभूता वयमितस्ततो वेश्याप्राङ्गणे स्मार्त्तं परिश्रमम्न्विष्यन्तो भवदन्तिकमागताः स्म। तदत्र कानि प्रायश्चित्तानि?

विश्वभाण्डः—(स्मृतिमभिनीय, स्वनासापुटेऽङ्गुलिं प्रदाय परमार्थतो निरूप्याह) यदि स्वरूपं ब्राह्मणो मृतस्तदा तद्वनितायाः सुतस्य वा मुखे गोमयजलं वह्निवर्णं कृत्वा प्रदीयतां तेनोभयोर्दिव्या गतिः

मिथ्यार्णवः—( कर्णे स्वैरम् ] मक्षिकापाशाघातेन न मृतः, किन्तु रजकीं रममाणः स्वैं पौरजनैर्लोष्ट्रपातैर्हतः।

विश्वभाण्डः—तदा सर्वं निस्तीर्णा निर्मञ्छनं कृत्वा। पापीयसां, तेन पापेन रजकी विलिप्ता।

मृगाङ्कलेखा—अण्णो पण्डिदो तुमम् *

मिथ्यार्णवः—( नायिकामवलोक्य ]

केनाऽऽराधि सरोरुहे सुरनदीतीरे मृडानीश्वरः
केनाऽकारि च शम्बरारिचरणे भक्तिर्नितान्तं मुदा।
केनाऽङ्ग सुरसिन्धुसिन्धुमिलने व्यामोचि निर्मोहतो,
यस्यैवाङ्कमलङ्करिष्यति जगद्व्यामोहमूर्तिः स्वयम्॥

* अन्यः पण्डितस्त्वम्।

[ पुनः सर्वानवलोक्यात्मगतम् , वाराङ्गनालिंगनाय मम स- ... । ... चात्रैव धूर्तानां मेलकं , नहि जलौकसामङ्ग- ... लमिहाऽवस्थानेन । ( इति निष्क्रान्तः । )

राजा - अद्यापि कथं नायातः साधुहिंसको दण्डपालकः ?

... - [ प्रविश्य, मदमुपनीय ] अलिहत्त - मोषएज्जेव सअलं ... व्याउलं हग्गे ता परमाणम्हिदो गणिआ-संदसणत्थं आगदो अम्हि । ❀

राजा -( सभयं चिन्तामुपनीय ) मन्त्रिन् ! चौरेभ्यो महती भीतिः किमिदानीङ्करणीयम् ?

मन्त्री--देव ! सैन्यं सज्जीकृत्य प्रथमतो मम रक्षणं विधेयं ततो देव्यास्ततः प्रासादस्य च ।

राजा—[ सकष्टम ]—

रात्रौ तारकनायकेक्षणमुखान्यूर्ध्वं पिधानम्विना ।

नित्यं जर्जरभित्तिपातभयतो देव्या समं जागरः ॥

यस्मिन् भेकरवागतोरगभयात् पाणौ सदैवौषधं ।

प्रासादः खलु तादृशः प्रथमतः संरक्ष्यतां चोरतः ॥

बन्धुरा-अज्ज मन्तिअर ! किरसी सा देई जं चिन्तणो देवो विसीददि । +

मन्त्री-तद्गुणवर्णने अनन्त इव कः सहस्रमुखः ?

बन्धुरा- अज्ज ! तधावि सुणीअदु । +

मन्त्री-भवतु त्वदुपरोधाद्वर्ण्यते संक्षेपेण—

---

❀ असिहस्तमोषकैश्चौरैरेव सकल नगर व्याकुलीभूत तावात्परमा-नन्दितो गणिकासंदर्शनार्थमागतोऽस्मि । + आर्य मन्त्रिवर ! कीदृशी सा देवी यां चिन्तयन् देवो विषीदति ? + आर्य ! तथापि श्रूयताम् ।

दर्शेन्दुपूर्णवदनाऽञ्जनपुञ्जगौरी
मार्जारचारुनयना घटपीनमध्या।
प्रोत्तुङ्गपीनकुचचुम्बितनाभिदेशा
त्रैलोक्यमोहवसतिः खलु कामिनी सा ॥

बन्धुरा–अहो महीआलो विअड्ढाणं अग्गगण्णो अविअ तुमं कइचूडामणी। ❀

मन्त्री–देव! चौरभीतिर्महती, पतितः संग्रामसमयस्तत्कथं नाहूयते रणजम्बूकसेनापतिः?

रणजम्बूकः–(प्रविश्य, परिक्रम्य सगर्वम्) देओ सुणिअदु अम्हाणं वीरअणम्।

राजा (सप्रकाशम्) कथय।

रणजम्बूकः—देओ अज्ज मए रत्तपुप्फरसं पिअन्ती मक्खिआ अवलोइदा। तदो सत्तरं अङ्गे तणुत्तं णिवेसिअ खत्तिअच्चउदृएण समं अस्सं धारिअ त्थुलचम्मरज्जुएहिं समाकड्ढिदा। तोक्खखग्गप्पहारेण चम्मकोसत्तणं नीदा। ❀

राजा–तत्र कः सन्देहो नागायुतबलोऽसि।

मन्त्री—भोः सेनापते! पतितः संग्रामसमयः। तव साहसः कीदृशः?

रणजम्बूकः-[प्रस्फुटं संस्कृतमाश्रित्य]-

---

❀ अहो महीपालो विदग्धानामग्रगण्यः अपि च त्वं कविचूडामणिः। देव! श्रूयतामस्माकं वीरत्वम्। ❀ देव अद्य मया रक्तपुष्परसं पिबन्ती मक्षिका अवलोकिता। ततः सत्वरं अङ्गे तनुत्रं निवेश्य क्षत्रियचतुष्टयेन समं अश्वं धृत्वा स्थूलचर्मरज्जुभिः समाकृष्टा तीक्ष्णखड्गप्रहारेण च चर्मकोषत्वं नीता।

यथा कृष्णमलकक पदयुगे हृष्ट्वाऽङ्गनाया दृशौ,
रक्ताग्निवशाद्भयेन सुतरां म्लानेन्द्रियो मेदिनीम्।
पश्चान् दर्शनिशार्तमिस्त्रनिकरच्छन्नामथाऽऽसीत्तथा
मूर्छाय. भुवि का कथा समरतो रक्तास्यसर्काद्भुताम् ॥

( मृगाङ्कलेखा उच्चैर्हसति )

रणजम्बूकः—आः पामरि गणिए मं उवहससि ता कुण म-
ह मम समरं * [ इति रोषं नाटयति ]।

प्रतीहारः — ( प्रविश्य संस्कृतमाश्रित्य ) देव! महायात्रिको
नाम साम्वत्सरिको द्वारि वर्तते ।

राजा - प्रवेशय। (प्रतीहारस्तथा करोति, महायात्रिकः – प-
त्रिकां प्रसार्य दक्षिणाभिमुखः पठति )

भवे भवतु भास्कर सुरगुरुश्च राश्यगः,
स्वांशुमनयोऽष्टमः सर्वथ पवित्रीनन्दनः।
दिनेशगणनाप्रतः स खलु सैंहिकेयो बली,
फलं किमु परैः पुनः शशिकवीन्दुजातैर्ग्रहैः ॥

मन्त्री—श्रुतः शुभाशीर्वादः। सम्प्रति संग्रामार्थी देवः तत्क्रिय-
तां महायात्राक्षणः ।

महायात्रिकः पूर्णिमासकशनिवासरे श्रवणनक्षत्रे वृश्चिकलग्ने
प्रातः समये देवस्य महायात्रा भविष्यति ।

फलहाङ्कुरः–ता एत्थ मरणं जाअदि। +

महायात्रिकः – प्रजानामापदं नीत्वा यातु नाम ।

विश्वभाण्डः—[ पूर्वां पश्चिमां दिशामवलोक्य ]—

---

* आः पामरि गणिके ! मामुपहससि, तत् कुरु मया मम समरम्।

+ तदा मरणं जायते ।

भानुबिम्बमिदमस्तगामि च प्रोथतं कुमुदबन्धुमण्डलम्।
दृश्यते रतिपतेः प्रवासिनां कोपरक्तमिव लोचनद्वयम्॥

[ नायिकामवलोक्य सकामं ] वत्स कलहाङ्कुर! प्रवृत्तः सन्ध्यासमयः तदस्याः कर्णे स्वैरं भण यथाऽनया सार्द्धं निभृतमस्माकं सन्ध्या निर्वहति।

कलहाङ्कुरः- [ आकर्ण्यात्मगतम् - दुष्टोऽयमुपाध्यायस्तरुणीं रन्तुकामः )

किं मे सद्गुरुसेवनैः प्रतिदिनं किं व्योमधामार्चनैः
किं स्वाध्ययनेन वा सुरपुरप्राप्त्याऽथवा किं फलम्।
एतस्याः कुचकुम्भनिर्भरपरीरम्भप्रभावोद्गत—
स्वेदाम्भोभिरनङ्गवह्निरधुना निर्वापितो नो यदि॥

[ भवतु तदविलम्बेन कथमेषा निर्भरमालिङ्ग्य न चुम्ब्यते? उपसृत्य प्रकाशम् ] मिअङ्कलेहे! किम्पि जल्पिदुमिच्छेमि। *

मृगाङ्कलेखा—जइ जुत्तं ता कधं ण भणसि? +

कलहाङ्कुरः—[ संस्कृतमाश्रित्य ]
तारुण्यं दिवसानि पञ्च दश वा पीनस्तनोत्तम्भनं
नो जातं पुनरित्यहो विधुमुखि! प्राणास्तु न स्थायिनः
ज्ञात्वैवं समुपेक्षतेऽभ्युपगतो यद्वामदृष्ट्या युवा
न स्थैर्यं कुचयोर्हृदि स्थिरतरं जागर्ति शल्यं हि तत्॥

( मृगांकलेखा किञ्चित् स्मयति )

कलहाङ्कुरः—( पुनः ) मिअंकलेहे! किम्पि रहस्यं जल्पेमि

* मृगाङ्कलेखे किमपि जल्पितुमिच्छामि। + यदि युक्तं तत्कथं न भणसि?

सुणोदु भोदी। ॐ [ इति श्रुतिमूले मिलित्वा निर्भरमालिङ्ग्योष्ठे-ऽश्रु चुम्ब, संस्कृतमाश्रित्य ]—

स्वादितः सुनशनच्छदसीधुर्नामरैर्विधुरबुद्धिभिरस्याः
कद्विधुन्तुदमुखावशिष्टः पीयते प्रमुदितं हरिणाङ्कः॥

विश्वभाण्डः—( सक्रोधम् ) अरे पामरवटो। मत्कांक्षितां नायिकामालिङ्गसि, चुम्बसि चाऽतस्त्वं प्रायश्चित्ती।

कलहाङ्कुरः—अहं ण तुमं जदो सिस्सलिङ्गिदां नायिकां माकांछिदां जल्पेसि। +

विश्वभाण्डः—येनांगेन योगादगजो हस्तीत्युच्यते तदभिधानमंगं तव छेद्यं भवति, येन गुरुवाञ्छिता नायिका स्पृष्टा।

कलहाङ्कुरः-अङ्गणाजहणरज्जणणामधेअं अङ्गं तुह विच्छेज्जं भोदि, येण सिस्सपरिचुम्बिदां नायिकां स्ववाञ्छिदां जल्पेसि। ॐ

विश्वभाण्डः—अधरो यस्याच्छादनं तस्योत्पाटनं युक्तं येनास्या अधरः पीडितः।

कलहाङ्कुरः लिगि प्पारणेति धातुनोरपपच्चएण ज रूअं सिज्झं भोदि तुह तस्स उप्पाटनं जोग्गं जेण सिस्सचुम्बिदां णाइआं पेक्खसि। ॐ ( इत्यन्योन्यं कलहं कुर्वाणौ नृत्यतः, सर्वे

---

ॐ मृगाङ्कलेखे! किमपि रहस्यं जल्पामि श्रृणोतु भवती। अहं न त्वं यतः शिष्यालिङ्गितां नायिकां मत्कांक्षितां जल्पसि।

ॐ अङ्गनाजघनरञ्जननामधेयमंगं तव विच्छेद्यं भवति येन शिष्यपरिचुम्बितां नायिकां स्ववाञ्छितां जल्पसि। लिगि प्रापणे इति धातोरुप्रत्ययेन यद्रूपं सिद्धं भवति, तस्योत्पाटनं योग्यं येन शिष्यचुम्बितां नायिकां प्रेक्षसे।

सायं चन्द्रकलाभृतोदयमितिस्पष्टौ स्तनौ स्तनः ।
स्पर्शीव कुमरी नखाङ्कुरचिरः शोणाम्बराभ्यन्तरे
अस्याः कं न त्रिलोकनोत्कमकरोत्तीक्ष्णः कटाक्षः स्वयं
भृङ्गाकृष्टमरिष्ठकेतकदलाग्निं वरण्यम् ॥

अपि च-उत्तुङ्गस्तनशैलदुस्तरभुवो निम्नाभिनाभिस्थली ,
भीमं देहवनं स्फुरद्भुजलतं लोमालिकालाकुलम् ।
व्याधः पञ्चशरः किरत्यनितरां नीडार्थं कटाक्षाशुगान्
तस्मै ब्रूहि मनःकुरङ्ग ! शरणं कं साम्प्रतं यास्यसि ॥

पुनः [सविमर्शम्] कथमेतौ कितवौ वञ्चनीयौ । भवतु, तावदात्मनो वैष्णवत्वं प्रकटीकृत्य वञ्चयामि ।

जिह्वेऽनिशं कर्णिरिति कमर,
लोचन त्वं
व्याप्तं विलोकय जगद्धरिणा समस्तम् ।
आकर्णय श्रवण कीर्तिकथा मुरारे-
र्नारायणं शरणमाश्रय चित्तमुग्ध ॥

[पुनरात्मगतम्] आः जातं हरिस्मरणेन महापातकं किं करिष्यामि प्रायश्चित्तमात्मनः ?

विश्वभाण्डः- [आकर्ण्यात्मगतम्] धूर्तोऽयं मिश्रः कैतवं प्रकटयति । भवतु, अहमपि किञ्चित्प्रकटयामि । (प्रकाशम्)

त्रैलोक्यमौलिमुकुटाञ्चितनीलरत्नं
पद्मालयावदनतामरसद्विरेफम् ।
दैत्याङ्गनानयनतोयनिपातधूमं
कृष्णं सदैव मनसा परिचिन्तयामि ॥

अवलोक्यमिश्रः(सरोषम्) वत्स कुलाल ! पठ वैष्णवधर्मम् ।

[आत्मगतम् — कथं यथाऽस्मिन्मध्ये गणिकां विना जीवनीयम् ? [प्रकाशम्] वत्स कुलाल ! पश्य मध्याह्नः स्फुटः—

मार्तण्डश्चण्डतापैः प्रतपति वसुधां पत्रिणः कुञ्जसंस्थाः,
प्रोज्जृम्भाऽम्भोजराजीतलशरणगता निश्चला राजहंसाः ।
पान्थाः श्रान्ताश्च कान्ताश्रितविरहशिखिज्वालयाऽऽप्लुष्टचित्ताः
स्वानुच्छायासुलीनाः क्षितलिखनपराः संततं निःश्वसन्ति

मदनान्धमिश्रः- वत्स ! कस्याश्रमे भोजनसिद्धिरस्तु ?

कुलालः—अज्ज अत्थि दाव एत्थज्जेव णअरे बन्धुरा णाम कुट्टिणी सा क्खु अदिधीणं परिचज्जं करेदित्ति सुणीअदि ता अज्ज ताईज्जेव भोअणसिद्धी + ।

मदनान्धमिश्रः— कुलीना सा ।

कुलालः—एत्थ को सन्देहो चण्डालो वि अस्स घरे पाणीअं ण पीअदि ॐ।

मदनान्धमिश्रः -(सोत्साहम्) वत्स ! तावदुपसर्पावः ।
(इत्युभौ परिक्रम्य बन्धुरायाः प्राङ्गणमुपसृत्योपविष्टौ)

सुजङ्गः -अज्ज ! एदं भद्दासणं उअविसदु मिस्सो + ।

मदनान्धः— [नाट्येनोपविश्य, सर्वानवलोक्य चात्मगतम्] अहो ! आश्चर्यं पुरतो मायिकारम्भम्-

---

+ — आर्य ! अस्ति तावदत्रैव नगरे बन्धुरा नाम कुट्टिनी, सा खलु अतिथीनां परिचर्यां करोतीति श्रूयते तदद्य तत्रैव भोजनसिद्धिः ।
ॐ अत्र कः सन्देहः चाण्डालोऽपि अस्या गृहे पानीयं न पिबति ।
+ आर्य ! इदं भद्रासनमुपविशतु मिश्रः ।

[ उभौ परिक्रम्य बन्धुरायाः प्राङ्गणमुपसृत्य प्रविष्टौ । युगपत् क सा बन्धुरा नायिका? ततः प्रविशति बन्धुरा नायिका च । विश्वभाण्डो मृगाङ्कलेखामवलोक्य ]—

अस्याः शरच्छशधरप्रतिमाननाया:
किञ्चित्कटाक्षमिलिता यदि नैव दृष्टिः ।
तत्केन मन्मथ इदं किल कर्णलग्न-
मिन्दीवरं मृदुलमञ्जनपत्ररम्यम् ॥

नितान्तपरिघूर्णनशीला चलद्भिताक्षिका लोलाः ।
अस्या नयननिपाता दुस्सहनीया हरस्यापि ॥

कलहांकुरः — बन्धुरे ! एद्दिस्सिं समये आआदो मअणान्धमिस्सो । + ( नेपथ्ये )

वेश्याङ्गरागरसलोहितयज्ञसूत्रः
शङ्काशनाशनविलोहितताम्रनेत्रः । ●
आभालपूर्णतिलको हृतधर्मकच्छः
संसर्पति स्वयमयं मदनान्धमिश्रः ॥

ततः प्रविशति स्नातकेन कुलालनामधेयेनानुगम्यमानो मदनान्धमिश्रः )

मदनान्धमिश्रः— [ समन्तादवलोक्य ] अहो भ्रमद्भ्रमरावलीव्रतयितरसालबकुलः कोकिलकलध्वनिजनितविषादविरहिणीजनपीवरनिःश्वासानिलः कुसुमकालो वर्तते । अपि च —

कावेरीतीरखेलद्युतिविद्रुतिवचःछ्रीकारासक्तशीतः,
श्रीखण्डामोदवाही प्रमुदितमदनः प्राणविश्रामधामा ।
किञ्चिदुत्याधूतचूतद्रुमसुकुलकुलः पुष्पवत्या लताया
भीतः स्पर्शादिवायं प्रसरति पवनो दक्षिणो मन्दमन्दम्

---

इदानीमस्मि समये आगतो मदनान्धमिश्रः । शंकाशनं भंगचूर्णम्

बन्धुरा-(पुरः परिक्रम्य) अज्ज भअवं चिट्ठदु अज्ज कलहो सभीअवट्टिणी रअणी वट्टदि। पच्चुसहोमात्थं मअग्गान्धमिस्सो आगमिस्सदि सोक्खु जं आदिसदि तं काद्व्वं' * [उभौ तथास्तु] इति निष्क्रान्ताः सर्वे ।

इति हास्यार्णवे प्रहसने सभाभिर्णयो नाम प्रथमोऽङ्कः

# द्वितीयः अंकः

[ ततः प्रविशति विश्वभाण्डः स्नातकश्च ]

विश्वभाण्डः-[प्राचीमवलोक्य] अहो! दिगंगनाशिरःसिन्दूर शोभेव दिनकरकिरणावलिर्दृश्यते। [परिक्रम्य पुरोवापीमवलोक्य च]

अन्यत्र वाञ्छितनिशां परिलोहिताङ्ग-
मन्याङ्गनागतमिवागतमुष्णरश्मिम् ।
प्रातर्निरीक्ष्य कुपितेव हि पद्मिनीय-
मुत्फुल्लरक्तकमलोहितलोचनाऽभूत् ॥

अपि च नारीणां मृगनाभिकुङ्कुमरसप्रक्षालनश्यामकान् ।
सम्भोगश्रमशीकरान् परिकिरन्नाकम्पयन् कुन्तलान् ॥
पुष्पामोदमनोरमान् विगलितानम्भोजगन्धं वहन् ।
प्रातस्त्यः पवनो वहत्ययमलं स्वान्तप्रमोदप्रदः ॥

*आर्यभगवन्! तिष्ठत्वद्य कलहः समीपवर्तिनी रजनी वर्तते। प्रत्युषहोमार्थं मदनान्धमिश्र आगमिष्यति। स खलु यदादिशति तत् कर्तव्यम् ।

हसन्ति, नेपथ्ये वैतालिकः— शुभः सन्ध्यासमयोऽस्तु दिव सस्य —

गाढं प्रौढाङ्गनाभिः सुरतसमरतः स्वेदधाराविलाङ्गैः,
मुग्धाभिन्नस्तनाग्रं रतिसमरभयं चिन्तयन्ताभिरेभि
पान्थानामङ्गनाभिः सजलकलनयनं शून्यचित्ताभिरुच्चैः,
कष्टं दृष्टोऽस्तशैलं भुरामभलच्यं मण्डलमण्डरश्मेः ॥

अपि च गतवति दिननाथे पश्चिमदमाधरान्तं,
शिशिरकरमयूखैर्निर्भरं दह्यमाना ।
परिहृतमिलितालिः प्राणकान्तेव दीना,
सपदि कमलिनीयं हास्यहीना बभूव ॥

कैतन्मार्तण्डबिम्बं सरसि सरसिजश्रेणिहास्यं क यातं
क्वैते याता रथाङ्गाः सपदि गतद्वियः क प्रविष्टा मरालाः
सन्ध्यारागारुणाङ्गः कुपित इव पतिः प्रोद्यतोऽयं हिमांशु-
र्मन्ये हर्षादिवेयं हसति कुमुदिनी जाग्रतीवालिनादैः ॥

स्वर्धामाऽमृतपानचारुचषकं किं कामदेवाङ्गना—
क्रीडाकन्दुक एष किं, सुरनदीहृण्डीरपिण्डः किमु ?
किं छत्रं स्मरभूपतेः, किमु यशःपुञ्जं, पुरस्ताविदं,
चेतःसंशयकारकं समुदितं शीतद्युतेर्मण्डलम् ॥

मन्त्री—प्रवृत्तः सन्ध्याकालस्तत्कथं नित्यक्रियायै न गम्यते ?

राजा— किं तेन चौरचक्रभयाच्चिन्ताकुलोऽस्मि । भवतु तथापि यास्यामि क्षणं विरम्य दृश्यत्तामनयोर्गुरुशिष्ययोर्विरोधः।

विश्वभाण्डः—दण्डहस्तः सामर्षं धावति, कलहांकुरः उच्चैः शीत्कृत्य सर्वाङ्गं पुलकयति इत्यन्योन्यं नायिकाञ्चले गृहीत्वा ममेयमिति कृत्वा कलहायमानौ परस्परं कृष्यतः ।

मदनान्धमिश्रः — आवाभ्यां परिणेतव्यैषा ।

विश्वभाण्डः — को दोषः ?

एकः शिवो विविधमेव विकारमेत्य
व्याप्याखिलं जगदिदं रमते मृडानीम् ।
ब्रह्माण्डभाण्डकुहरे समुपेत्य सम्यक्
स्त्रीत्वं मनोहरणभूमि सदा वहन्तीम् ॥

कुलालः — [ आत्मगतम् आभ्यां धूर्ताभ्यां मिलितं भवतु अहमपि कलहांकुरेण समं सख्यं करोमि इति परिक्रम्य कलहांकुरस्य कण्ठमालिंग्य कर्णे स्वैरम् ] — वअस्स पेक्खस्स एदेहिं गुरुएहिं मिलिदं एसा मिथङ्कलेहा एदेहिं ज्जेव परिणेदव्वा, सा कधं अम्मेहिं एस बन्धुरा णो परिणीअदि ? ❋

कलहांकुरः — वअस्स ! भद्दं भणिदं जदो अम्हाणं वि वुड्ढवा सुरदं ण जाणेदुं, वट्टदि, किं उण एक्कं परमं दुक्खं एसा तिहुअणमोहिणी वुड्ढवेहिं परिणेदव्वा णहि मालइमाला वाणरहत्थगदा सोहइ, णहि कत्थुरिआगुणग्गामं कुग्गमिणो जाणन्दि, णहि गलिदजोव्वणोरत्थले मोत्तिअमाला सोहई । +

---

❋ — वयस्य ! प्रेक्षस्व एताभ्यां गुरुभ्यां मिलितम् । एषा मृगाङ्कलेखा एताभ्यामेव परिणेतव्या, तत्कथमावाभ्यामेव बन्धुरा न परिणीयते

+ — वयस्य भद्रं भणितं यतः अस्माकमपि वृद्धासुरतं न ज्ञातं वर्तते । किं पुनरेकं परमं दुःखं एषा त्रिभुवनमोहिनी वृद्धाभ्यां परिणेतव्या नहि मालतिमाला वानरहस्तगता शोभते नहि कस्तूरिकागुणग्रामं कुग्रामिणो जानन्ति नहि गलितयौवनाया वक्षःस्थले मौक्तिकमाला शोभते

कुलालः — वअस्स ! पदेहिं ज्जेव वुड्ढएहिं कत्तिदिणं जीविदव्वं, एदावं लोआन्तरगमणे एषा अम्हेहिं परिणेदव्वा ❀

कलहांकुरः — सच्चं तधावि पढमं दुक्खं । =

कुलालः- एहिम्पि पदिवासरं एदाणं भिक्खाटण-समये एसा गेहवट्टिणी भविस्सदि वन्धुरा तिमराउललोअणा। तदो अम्हाणं मनोरहसिद्धी । ❀

कलहांकुरः- भोदु जं भणदि वअस्सो । =

वन्धुरा · (विहस्यात्मगतम्) मिलिदं सठेहिं तहिं परिचिद भोदि। ❀

मदनान्धमिश्रः- भो महामहोपाध्याय ! कीदृशो युवयोर्न्यायः ? [illegible] प्रश्नः ।

विश्वभाण्डः- [illegible]तां मृगाङ्कलेखामयं परिणेतुमिच्छति ।

मदनान्धमिश्रः- भो कलहांकुरः ! तव प्रत्युत्तरं कीदृशम् ?

कलहांकुरः- एसा मियङ्कलेहा मये आलिङ्गिदा चुम्बिदा तधावि एस इमां परिणेदुमिच्छदि । =

---

❀ वयस्य एताभ्यामेव वृद्धाभ्यां कतिदिनं जीवितव्यम् एतयो र्लोकान्तरगमने एषा आवाभ्यां परिणेतव्या =—सत्यं तथापि प्रथमं दुःखम् । ❀—इदानीमपि प्रतिवासरमेतेषां भिक्षाटनसमये एषा गृहवर्तिनी भविष्यति। बन्धुरा तिमिराकुललोचना तदाऽस्माकं मनोरथसिद्धिः । =—भवतु यत्कथयति वयस्यः ❀—मिलितं शठाभ्यां तदा [illegible] परिचितं भवति =—एषा मृगाङ्कलेखा मया आलिङ्गिता परिचुम्बिता तथाप्येष इमां परिणेतुमिच्छति ।

मदनान्धमिश्रः— अलं शुष्कचर्वणेन ज्ञातं न्यायतत्त्वम् । एषा प्रथमत उपाध्यायेन कल्पिता । एतेन कथमप्यंशेनैकेनास्य भवति, व्यवस्थापकत्वात् समन्तादस्माकं भवति । (पुनः ससम्भ्रमम्) भो भो आर्यपुत्र ! यथा त्वं द्वादशवर्षीयो वरस्तथा चोपपतिगणानालेखामिव लेखां शरीरतो दधती कन्येयं तव योग्या वर्षशतात् किञ्चिदप्यधिका !

कुलाल:— (उसृत्य संस्कृतमाश्रित्य) एषाऽपि व्यवस्थापकशिष्यत्वान्ममैव भवति ।

मदनान्धमिश्रः— भो आर्यपुत्र कलहांकुर ! भवतैव आनीता मच्छिष्येण सममेषा परिणीयताम् ।

कलहांकुरः— जधा आसधं विप्पवरस्स । *

बन्धुरा— [ सहर्षमात्मगतम्, संस्कृतमाश्रित्य ] अहो ! अयि, प्रसन्नः प्रजापतिः, यतो वार्द्धकेऽपि तरुणपतिद्वयलाभः ।

विश्वभाण्डः ( स्नातकमवलोक्य सस्मितमात्मगतम् )

निष्क्रमृति शिशीः [illegible] येन [illegible] योषितः ।
किं करिष्यति तत्रार्थं बटुः ! स्नशलाकया ॥

[ पुनः प्रकाशम् ] प्रत्यासन्नो विवाहोत्सवस्तत्प्रभालुप्ये [illegible] महानिन्दकाचार्यः (प्रविश्य) सर्वानवलोक्य [illegible]—

ब्रह्माण्डे के द्विजाः [illegible] पाण्डित्येन कुलेन वा ।
ये स्पर्धितुं मया [illegible]जितोद्यमाः ॥

( पुनः [illegible] अरेरे वेदाः ।

* —यथा आज्ञप्तं विप्रवरस्य

कलहांकुरः-- अज्ज ! वह्मदुहणिग्गदा वेआ ता कधं म अदा विअहृदा ? *

महानिन्दकाचार्यः- आः क्षुद्रबुद्धि ब्रह्माणं गणयसि। शृणु तत्कौलीन्यपरीक्षार्थं स्वर्गं गतेन मया—

पाद्यं विष्णुपदीजलेन चरणे दत्तं शिरोवर्तिना,

तत्क्रोधेन करप्रहारनिकरैः संताडितः शङ्करः।

आयुष्मान् न कृतो भवात् प्रणमति ब्रह्माण्यवज्ञावशात्

भो दृष्टस्त्रिदशप्रतिग्रहपरः पापात्परो गीष्पतिः॥

मदनान्धमिश्रः-- अलं वाग्विस्तरेण निर्वाह्यतामस्माकं विवाहद्वयम्।

महानिन्दकाचार्यः -- अहमप्रतिग्राही।

कङ्कालः- गणिआप्पडिग्गहे को दोषः ? **

महानिन्दकाचार्यः-- भद्रमुक्तमनेन, न ज्ञायते, कुलीनेयं वेश्या। [सादरं] भगवन् ! कया सह कस्य विवाहः ?

बन्ध भाण्डः-आवां योग्यावुपाध्यायौ वराबस्या मृगीदृशः।

शिष्यावेतावमुष्यास्तु तिमिराकुलचक्षुषः॥

महानिन्दकाचार्यः--[विहस्यात्मगतम्] आचार्य !

( पुनर्मृगाङ्कलेखामवलोक्य )

प्रविशति कटाक्षविशिखे तीक्ष्णतरे भेदके च हृदयानाम्।

लक्ष्मीभूय तथापि स्थातुमपेक्षा भवेन्न कस्यापि।

अपि च-दुग्धसमुद्रसमुत्थितविषमिव परिदुःसहा हरस्यापि।

अस्या दृशि विमलायां तरलतरतारका भीमा॥

---

*—आर्य ! ब्रह्ममुखनिर्गता वेदास्तत्कथं भवता विरचिताः ?

**- गणिकाप्रतिग्रहे को दोषः ?

किञ्चास्या निर्भरपरिरम्भणं विना न भवेदानीं जीवनीयम्। [ प्रकाशम् ]

एतस्याः स्तनपद्मकोरकयुगं यस्याननेन्दोः सित—
ज्योत्स्नाभिर्न भवत्यतो मृगदृशः शङ्के प्रकाशं पुनः।
तस्मिन्लोचनपङ्कजं विकशितं भ्रूभृङ्गसंसेवितं,
स्वान्ते संशयमातनोति सुतरामेतन्ममैवाद्भुतम्॥

अपि च अहो मूढास्ते

पानाचारतोऽमृतं वसतयेऽत्यस्याः स्तनक्ष्मावरो-
ऽधस्तात्स्वजघनान्तकन्दरवरः सकथाव चञ्चुमृगः।
जप्यो मन्त्रवरो मनोहरकथा ध्यानाय वक्त्राम्बुजं,
चेत्थं देहतपःस्थले सति कथं सन्तो वनान्तं गताः॥

पुनः ( सस्मरणं ) भो भो विश्वभण्ड ! लग्नकरणार्थं कथं नाहूयते महायात्रिकनामा मौहूर्तिकः ?

महायात्रिकः— [ प्रविश्य, पञ्जिकां प्रसार्य ] भो भो पण्डित ! किं गण्यतेऽयम् ?

मदनान्धमिश्रः- क्रियतां वैवाहिककृत्यम्। [ महायात्रिकः कठिनीं पातयित्वा ] —

येन केनापि लग्नेन वासरे यस्य कस्यचित्।
यत्र कुत्रापि नक्षत्रे यद्वा तद्वा विधीयताम्॥

महानिन्दकाचार्यः- योग्य एव दैवज्ञः। ( प्रकाशम् ) भो भो साम्वत्सरिक ! कदाचिदनेन वैधव्यं जायते।

महायात्रिकः- किं पुरुषहीना तरुणी यद्येतयोर्वैधव्यं भविष्यति ?

महानिन्दकाचार्यः- भो भो विश्वभण्ड ! विश्वभाण्डवाक्यिनो यथोद्दिष्टकल्पेऽनुसरथ।

महायात्रिकः— [ सहासं ] युक्तमुपहारः। पुरुषाणां व- ध्यमानो भूषण सर्वं यथोद्दिष्टतल्पे करग्रहं विधायोपविशन्ति वृद्धाः । पतिद्वयमध्यगता नायिका सविषादमात्मगतम्—

श्रीगौरीए पदाब्जाचणमविनिरदं जकिदं सव्वकालं
णिच्चं चित्तेण भत्ती विद्अल अलिसं जकिदा पुष्पवाणो
तस्माज्जेवप्पमादो णिहिल सुरकिदो णं गुरुप्पाणदण्डो
पच्चासण्णो विहावो विअलतररुजाजीएहि विप्पेहिं दोहिं॥

महानिन्दकः— भुजंग ! समानीयतामधुपर्कः।

भुजङ्गः- ( उपसृत्य ) अज्ज ! महुणो अहावे अत्थि दुग्धं णीरम्पि *

महानिन्दकाचार्यः— समानय। [ भुजंगः समानी यार्पयति, महानिन्दकाचार्यः प्रत्येकवराभिमुखम् ]

ओं श्मशानानलदग्धोऽसि,परित्यक्तोऽसि बान्धवैः।
इदं नीरमिदं क्षीरमत्र स्नाहि इदं पिव॥

(पुनर्दूर्वाक्षतमादाय )

ओं मरणं प्राणिनां नित्यं जीवनं स्वप्नवद् भुवि ।
भवद्भिरिति विज्ञाय कर्त्तव्या नात्र शोचना ॥

---

— श्रीगौर्याः पादपद्मार्चनमविनिरतं यत्कृतं सर्वकालं
नित्यं चित्तेन ध्यानं दृढतरमनिशं यत्कृतं पुष्पवाण ।
तस्मादेव प्रमादो निखिलसुरकृतो यद्गुरुप्राणदण्डः,
प्रत्यासन्नो विवाहो विकलतररुजा जीर्णविप्रद्वयाभ्याम् ॥

*— आर्य ! मधुनोऽभावे अस्ति दुग्धं नीरमपि ।

(पुनरुत्थायोच्चैः)

पितृकाननमेदिन्यां महाशय्यानुशायिनः।
सुचिरं स्थीयतां नित्यं महानिद्रावलम्बिनः ॥

महायात्रिकः तदुक्तं नराणां श्मशाने चिताशयनम्।

महानिन्दकाचार्यः -(उपसृत्य) भो कलहांकुर! दीयतां प्रथमतः शतवर्षकन्यादानदक्षिणा।

[ कलहांकुरः शक्राशनलड्डुकमर्पयति ]

महानिन्दकाचार्यः [ स्वस्तीति गृहीत्वा, सानन्दं शिरसि निधाय, स्फुटं प्रणवमुच्चार्य, गायत्र्यै नम इति भूमौ किञ्चित् त्यक्त्वा पुनर्भक्षयित्वा, सोत्साहम् )

जनयति सुरतेषु मुदं प्रथयति पीयूषवर्षिणीं वाणीम्।
रचयति लोचनकुतुकं स जयति शक्राशनानन्दः ॥

बन्धुरा— कुलीनवरो आअज्ज। ❀

महानिन्दकाचार्यः- (पुनरुपसृत्य) भो भो भगवन् मिश्र! प्रदीयतां कन्यादानदक्षिणा।

उभौ - प्रतिपाल्यतामब्दचतुष्टयम्।

महानिन्दकाचार्यः —तावदेषा वन्दकी तिष्ठतु, इति मृगाङ्कलेखां हस्ते गृहीत्वा तया सह सहर्षं नृत्यति

महायात्रिकः — भो भो महानिन्दकाचार्य! किमिदानीं भवतामपेक्षितमस्ति।?

महानिन्दकाचार्यः —(सहर्षम्)

❀—कुलीनवरः आचार्यः

लब्धेयं युवती मृगाङ्कवदनश्यामानन्दभूमिर्भृशं,
धूर्तानां निकरं दृष्टञ्च रभसात् प्राप्ताश्च हृष्टीयतः।
सम्प्रत्युद्भटशम्बरारिसमरं नानारतास्त्राङ्कितं,
गत्वा केलिगृहं विधातुमधिकं वाञ्छा वरीवर्तते ॥

इति हास्यार्णवं प्रहसनं समाप्तम्





